# चम्पूरामायणे

# बालकाण्डम्

०६ – ०४.१२.२०१७

vyoma

॥ वाचं धेनुमुपासीत ॥

Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# पुनरावर्तनम्

- एनं प्रबन्धं – वाल्मीकिः चिन्तयति
- उपागतौ – लवकुशयोः वर्णनम्
- एतौ मुनिः – वाल्मीकिना लवकुशयोः अध्यापनम्
- तौ पुनरितस्ततो – रामः लवकुशौ स्वभवनम् आनयति
- छन्दोमयीनां – लवकुशौ रामायणं गातुम् आरभेते

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

अस्ति प्रशस्ता जनलोचनानाम्
आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम्
राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- कथारम्भः – अयोध्यायाः वर्णनम्
- अस्ति, प्रशस्ता, जन-लोचनानाम्, आनन्द-सन्दायिषु, कोसलेषु, आज्ञा-समुत्सारित-दानवानाम्, राज्ञाम्, अयोध्या, इति, पुरी, रघूणाम्

अस्ति प्रशस्ता जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम् राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- अस्ति = विद्यते
- किम् अस्ति? पुरी = नगरी
- किंनाम्नी पुरी? अयोध्या इति = योद्धुमशक्या अन्वर्थनामिका
- कीदृशी पुरी? प्रशस्ता = प्रख्याता

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

अस्ति प्रशस्ता जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम् राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- कुत्र अस्ति? कोसलेषु = उत्तरकोसलेषु जनपदेषु
- कीदृशेषु कोसलेषु? जनलोचनानाम् आनन्दसन्दायिषु = समस्तसमृद्धतया प्रजानां नेत्रानन्दकरेषु

अस्ति प्रशस्ता जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम् राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- केषां पुरी? रघूणाम् = रघुवंशोत्पन्नानां राज्ञाम् = प्रजारञ्जकानां नृपाणाम्
- कीदृशानां रघूणाम्? आज्ञया = आदेशेनैव समुत्सारिताः = दूरात् निरस्ताः दानवाः = असुराः येषां, तेषाम् । प्रचण्डशासनानाम् इत्यर्थः ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

अस्ति प्रशस्ता जनलोचनानाम्    आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम्    राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- अन्वयः – जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु आज्ञासमुत्सारितदानवानां रघूणां राज्ञाम् अयोध्या इति प्रशस्ता पुरी अस्ति
- तात्पर्यम् – सकलसम्पत्समृद्धे उत्तरकोसलजनपदे प्रचण्डशासनानां प्रजारञ्जकाणां रघुवंशस्य नृपाणाम् अयोध्या इत्यन्वर्थनामिका प्रसिद्धा नगरी विद्यते ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अस्ति प्रशस्ता जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम् राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- अस्ति – "अस भुवि" – लट्, प्रथम.१
- जनलोचनानाम् – जनानां लोचनानि, तेषाम् । 'लोचनं नयनं नेत्रम् ईक्षणं चक्षुरक्षिणी' (अमरः) | अकारान्तः, नपुं, ६।३
- आनन्दसन्दायिषु – आनन्दं सन्ददति इति । उपपदसमासः, ताच्छील्ये णिनिः (कृत्) । नकारान्तः, पुं, ७.३

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अस्ति प्रशस्ता जनलोचनानाम्     आनन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानाम्     राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- कोसलेषु – देशविशेषस्य संज्ञा बहुवचनान्ता
- आज्ञा.... – आज्ञया समुत्सारिताः, आज्ञासमुत्सारिताः दानवाः येषां ते, तेषाम्
- राज्ञाम् – नकारान्तः, पुं, ६.३ । 'राजा राट्-पार्थिव-क्ष्माभृत्-नृप-भूप-महीक्षितः', 'राजा मृगाङ्के क्षत्त्रिये नृपे' (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# अस्ति प्रशस्ता जनलोचनानाम् आनन्दसन्दायिषु कोसलेषु ।
# आज्ञासमुत्सारितदानवानाम् राज्ञामयोध्येति पुरी रघूणाम् ॥११॥

- अयोध्या – योद्धुम् शक्या योध्या – युध् + ण्यत् (कृत्) । न योध्या ।
- पुरी – 'पूः स्त्री पुरी-नगर्यौ वा' (अमरः) | आकारान्तः, स्त्री, १.१
- रघूणाम् – बहुवचने तद्वंशजानाम् इत्यर्थः ।
- वृत्तम् – इन्द्रवज्रा । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' (११ अक्षराणि)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन
सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-
मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- ताम्, आवसत्, दशरथः, सुर-वन्दितेन, सङ्क्रन्दनेन, विहित-आसन-संविभागः, वृन्दारक-अरि-विजये, सुर-लोक-लब्ध-मन्दार-माल्य-मधु-वासित-वासभूमिः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- आवसत् = अधिवसति स्म
- किम् आवसत्? ताम् = अयोध्यानगरीम्
- कः आवसत्? दशरथः = दशरथनामा अजपुत्रः रघुवंशनृपः
- कीदृशः दशरथः? विहितासनसंविभागः = कृत-सिंहासन-विभागः, दत्त-अर्धासनः

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- केन विहितासनसंविभागः? सङ्क्रन्दनेन = इन्द्रेण
- कीदृशेन इन्द्रेण? सुरवन्दितेन = देवपूजितेन
- पुनश्च कीदृशः दशरथः? वृन्दारकारिविजये – वृन्दारकाणां = देवानाम् अरयः = शत्रवः, असुराः । तेषां विजये = पराभवे सति

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- सुरलोक...भूमिः – सुरलोके = स्वर्गे लब्धानि = प्राप्तानि, सन्तुष्टैः सुरैः दत्तानि मन्दाराणां = पारिजातकुसुमानां माल्यानि = स्रजः, मालाः । तेषां मधुना = पुष्परसेन वासिता = सुरभीकृता वासभूमिः = निवासस्थानं यस्य तादृशः । भूलोके अपि स्वर्गसुखम् अनुभवति इत्यर्थः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- अन्वयः – सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः, वृन्दारकारिविजये सुरलोक-लब्ध-मन्दारमाल्य-मधु-वासित-वासभूमिः दशरथः ताम् आवसत्
- तात्पर्यम् – दशरथो नाम नृपश्रेष्ठः अयोध्यानगरीम् अधिवसति स्म । सः दशरथः देवराजस्य इन्द्रस्यापि माननीयः, इन्द्रेण स्वस्य सिंहासने अर्धभागः तस्मै प्रदत्तः आसीत् । किञ्च, दानवानां विजयोत्तरं स्वर्गलोकात् लब्धानां पारिजातमालानां सुगन्धेन तस्य निवासः सुरभितो बभूव ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- आवसत् – आ+ “वस निवासे” – लङ्, प्रथम.१
- ताम् आवसत् – व्याकरणविशेषः । अयोध्यायां वसति – अयोध्याम् आवसति/अधिवसति/उपवसति । ‘उपान्वध्याङ्वसः’ (१.४.४८) इति अधिकरणस्य कर्मसंज्ञा ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
# वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- सुरवन्दितेन – सुरैः वन्दितः, तेन
- सङ्क्रन्दनेन – 'इन्द्रो मरुत्वान् मघवा.... सङ्क्रन्दनो दुश्च्यवनः' (अमरः)
- विहितासनसंविभागः – आसनस्य संविभागः, विहितः आसनसंविभागः यस्य सः

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- वृन्दारकारिविजये – वृन्दारकाणाम् अरयः, वृन्दारकारीणां विजयः, तस्मिन्। ‘वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्’ (अमरः)। ‘रिपौ वैरि-सपत्न-अरि-द्विषद्-द्वेषण-दुर्हृदः’ (अमरः) ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

तामावसद्दशरथः सुरवन्दितेन सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-मन्दारमाल्यमधुवासितवासभूमिः ॥१२॥

- सुर.... – सुराणां लोकः सुरलोकः, सुरलोके लब्धानि, मन्दाराणां माल्यानि, सुरलोकलब्धानि मन्दारमाल्यानि, सुर..माल्यानां मधु, सुर...मधुना वासिता, वासस्य भूमिः, सुर...वासिता वासभूमिः यस्य सः । इकारान्तः, पुं, १.१
- वृत्तम् - वसन्ततिलका

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्ग-देशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्यशृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- दशरथस्य पुत्राभावप्रयुक्तः शोकः, सुमन्त्रेण सूचितः उपायः

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- अथ, अस्मिन्, अनपत्यतया (ङमुडागमसन्धिः), दूयमान-मानसे, पुत्रार्थम्, क्रतुम्, अश्वमेधम्, विधातुम्, मन्त्रिभिः, समम्, मन्त्रयमाणे, दशरथे, सुमन्त्रः, प्रहृष्टमनाः, महर्षेः, अङ्ग-देश-सङ्गत-अवग्रह-निग्रह-शौण्डस्य, विभाण्डक-सूनोः, अवश्यम्, ऋष्यशृङ्गस्य, प्रसादात्, प्रभवः, भविता, कुमाराणाम्, इति, सनत्कुमार-उदीरितम्, पुरा-वृत्तम्, राज्ञे, दशरथाय, कथयामास

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- अथ = अनन्तरम्
- अस्मिन् दशरथे = कोसलनृपे
- अनपत्यतया = सन्ततेः अभावेन
- दूयमानमानसे – दूयमानम् = परितप्यमानं मानसं = मनः यस्य तादृशे

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- पुत्रार्थम् = सन्ततिप्राप्तये
- अश्वमेधं क्रतुम् = अश्वमेधसंज्ञकं यज्ञम्
- विधातुम् = कर्तुम्
- मन्त्रिभिः समम् = अमात्यैः सह

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- मन्त्रयमाणे = विचारयति सति
- सुमन्त्रः = दशरथस्य अमात्येषु अन्यतमः
- प्रहृष्टमनाः = सन्तुष्टचित्तः
- अस्मै दशरथाय

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- सनत्कुमारोदीरितम् = सनत्कुमारमहर्षिणा ब्रह्ममानसपुत्रेण (ब्रह्मसभायां) कथितम्
- पुरावृत्तम् = पूर्ववृत्तान्तम्
- कथयामास = उवाच

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- किं तत् पूर्ववृत्तम्?
- महर्षेः = ऋषिवर्यस्य
- अङ्गदेश... - अङ्गदेशे = अङ्गनामकराष्ट्रे सङ्गतः = प्राप्तः अवग्रहः = वृष्टिप्रतिबन्धे, तस्य निग्रहे = निवर्तने शौण्डस्य = दक्षस्य

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- विभाण्डकसूनोः = विभाण्डकमहर्षेः पुत्रस्य
- ऋष्यशृङ्गस्य = "ऋष्यशृङ्गाय मुनये विभाण्डकसुताय च । नमः शान्ताधिपतये सद्यः सद्वृष्टिहेतवे"
- प्रसादात् = अनुग्रहेण

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- अवश्यम् = निश्चयेन
- कुमाराणां प्रभवः = पुत्रजन्म
- भविता = भविष्यति
- इति

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- तस्य चैवंप्रभावस्य धर्मज्ञस्य महात्मनः । सुतार्थं तप्यमानस्य नासीद् वंशकरः सुतः ॥

(बाल ८.१)

- एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् । श्रूयतां तत् पुरावृत्तं पुराणे च मया श्रुतम् ॥
- ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः । सनत्कुमारो भगवान् पूर्वं कथितवान् स्वयम्॥

(बाल ९.१-२)

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- अनपत्यतया – न अपत्यम्, अनपत्यस्य भावः – अनपत्य+तल् (तद्धितः), तया। आकारान्तः, स्त्री, ३.१
- दूयमानमानसे – दूयमानं मानसं यस्य सः, तस्मिन् । “दूञ् उपतापे”+शानच्
- मन्त्रिभिः समम् – ‘सहयुक्तेऽप्रधाने’ (२.३.१९) इति तृतीया

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्य-शृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।

- मन्त्रयमाणे – "मत्रि गुप्तपरिभाषणे" + शानच् (कृत्), पुं ७.१
- अवग्रहः – "वृष्टिर्वर्षं तद्विघाते अवग्राह-अवग्रहौ समौ" (अमरः)
- भविता – "भू सत्तायाम्" – लुट्, प्रथम.१ । अनद्यतने भविष्यति लुट्
- कथयामास – "कथ वाक्यप्रबन्धे" लिट्, प्रथम.१

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- ऋष्यशृङ्गम् अङ्गदेशाद् आनीय दशरथः अश्वमेधयज्ञं पुत्रकामेष्टिं च आचरति
- सः, अपि, सुमन्त्र-वचनात् (छत्वसन्धिः), शान्त-आधिः, शान्ता-कुटुम्बिनम्, सम्बन्धिनम्, मुनिम्, आनीय, वसिष्ठ-आदिष्टम्, अश्वमेध-अध्वरम्, सरयू-रोधसि, विधाय, तत्र, पुत्रीयाम्, इष्टिम्, विधिवत्, कर्तुम्, आरभत ।

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- सोऽपि = दशरथः अपि
- सुमन्त्रवचनात् = सुमन्त्रेण कथितात् सनत्कुमारप्रसङ्गात्
- शान्ताधिः – शान्तः = शमं गतः आधिः = मानसिकव्यथा यस्य सः
- शान्ताकुटुम्बिनम् = रोमपादपुत्र्याः शान्तायाः पतिम्

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- सम्बन्धिनम् = भ्रातृसमस्य रोमपादस्य जामातारम्
- मुनिम् = ऋष्यशृङ्गम्
- आनीय = स्वयम् उपसर्प्य सगौरवम् अयोध्याम् आगमय्य
- वसिष्ठादिष्टम् = कुलगुरुणा वसिष्ठेन उपदिष्टम्

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- अश्वमेधाध्वरम् = अश्वमेधनामकं यज्ञम्
- सरयूरोधसि = सरयूनद्याः तीरे
- विधाय = कृत्वा
- तत्र = सरयूतीरे एव

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- पुत्रीयाम् इष्टिम् = पुत्रोत्पादनहेतुं यागम्
- विधिवत् = यथाशास्त्रम्
- कर्तुम् = विधातुम्
- आरभत = उपाक्रमत

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- सुमन्त्रस्य वचः श्रुत्वा हृष्टो दशरथोऽभवत् । अनुमान्य वसिष्ठं च सूतवाक्यं निशाम्य च । सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ (बाल ११.१३)
- इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् । अथर्वशिरसि प्रोक्तैः मन्त्रैः सिद्धां विधानतः ॥ (बाल १५.२)

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value ...

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- शान्ताधिः – इकारान्तः पुं, १.१ । शान्तः आधिः यस्य सः। 'पुंस्याधिर्मानसी व्यथा' (अमरः)
- शान्ताकुटुम्बिनम् – कुटुम्बः अस्य अस्तीति कुटुम्बी । कुटुम्ब+इन् (तद्धितः)। शान्तायाः कुटुम्बी । नकारान्तः, पुं, २.१ ।

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- सम्बन्धिनम् – सम्बन्धः अस्य अस्ति – सम्बन्ध + इन् (तद्धितः) । नकारान्तः, पुं, २.१
- वसिष्ठादिष्टम् – वसिष्ठेन आदिष्टः, तम्
- अश्वमेधाध्वरम् – अश्वमेधः इति अध्वरः, तम् । 'यज्ञः सवोऽध्वरो यागः' (अमरः)

सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।

- सरयूरोधसि – सरय्वाः रोधः, तस्मिन् । सकारान्तः, नपुं, ७.१ । 'कूलं रोधश्च तीरं च' (अमरः)
- पुत्रीयाम् – पुत्राणाम् इयम् – पुत्र + छ (तद्धितः) + टाप् (स्त्रीप्रत्ययः)
- आरभत – आ + "रभ राभस्ये" – लङ्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- अस्ति प्रशस्ता – अयोध्यायाः वर्णनम्
- तामावसद्दशरथः – दशरथस्य वर्णनम्
- अथास्मिन्ननपत्यतया – दुःखितं दशरथं प्रति सुमन्त्रस्य कथनम्
- सोऽपि सुमन्त्रवचनात् – दशरथेन अश्वमेधस्य पुत्रकामेष्ट्याः च विधानम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in